प्रमेयमिति सर्वं हृद्गतशक्ति[1]कलाया अविभागेनैव [2]भाती- ति ॥ २४ ॥

तदत्र 'सद्यो योगविमोक्षदम्' इति यत् पूर्वं सूचितं- परभैरवसमावेशफलं, तदुपसंहारद्वारेण प्रकटयति

एवं यो वेत्ति[3] तत्त्वेन[4] तस्य निर्वाणगामिनी ॥ २५ ॥
दीक्षा भवत्यसन्दिग्धा, तिलाज्याहुतिवर्जिता ।

एवमिति- उक्तप्रकारेण हृदयं [5]तत्त्वेन-निश्चयेन-निःशङ्कतया यो वेत्ति तस्य [6]दीक्षा तत्त्वेन-[7]परमार्थेन [8]निर्वाणं-फल- त्वेन गम्यते यया सा असंदिग्धा-स्वप्रत्ययेनैव एतद् हृद- यस्वरूपलाभ[9]युक्ता भवति । भैरवदेवताभिर्हृदयान्तर्गताभिः स्वरूपनिमीलनात्मकप्रपञ्चस्पन्दपरिवर्जनेन स्वरूपोन्मीलनात्म- कपरिस्पन्दप्रवणाभिर्दत्तमेतद् हृदयलक्षणं परं ज्ञानं, [9]क्षपि- तश्च संकोचात्मकमूलपाश इति जानात्येव । तेन [10]दान- क्षपणलक्षणां [11]दीक्षां [12]स्वप्रकाशं नयेत् । न अत्र तिलादी- नामुपयोगः । एतावता जीवन्मुक्त्यात्मकपरमसिद्धिपरिनि- ष्ठितधियं[13] प्रति [14]अन्यलाभादिकं न किंचिदुपयुज्यते इत्यु- क्तम् ॥ २५ ॥

अधुना तु समावेशाभ्यासोपयोगी पूजाविधिर्वक्तव्यो यतो वक्ष्यते "कृतपूजाविधिः सम्यक्" ( ३२ श्लो० )

---

१ 'कलायाः इति च' पाठः । २ 'भवती' पाठान्तरम् । ३ 'वेदेति' पाठान्तरम् । ४ तत्त्वो- इति पाठान्तरम् । ५ दीक्षेति पदमन्यत्र नास्ति । ६ परमार्थेन भवतीति पाठान्तरम् । ७ निर्वाणफलत्वेन गच्छति यस्य सा असंदिग्धेति पाठान्तरम् । ८ लाभो भवतीत्यपि पाठः । ९ क्षपितसंकोचात्ममूलपाश इत्यपि पाठः । १० दानक्षपणलक्षणा इति च पाठः । ११ दीक्षेति च पाठः । १२ स्वप्रकाशं [ स्वप्रतीतिं ] इति पाठान्तराणि । १३ हृदयमित्यपि पाठः । १४ हृदयलाभेति पाठान्तरम् ।

इति । तदत्र देहप्राणभुवि बुद्धिपदे च समावेशाभ्यास इति । तत्र हृदयमात्मसात्कर्तुं न्यासं दर्शयति

मूर्ध्नि वक्त्रे च हृदये गुह्ये मूर्तौ तथैव च ॥२६॥
न्यासं कृत्वा शिखां बद्ध्वा सप्तविंशतिमन्त्रिताम् ।
एकैकेन दिशां बन्धं दशानामपि कारयेत् ॥ २७॥
तालत्रयं पुरा दत्त्वा सशब्दं विघ्नशान्तये ।
शिखासंख्याभिजप्तेन तोयेनाभ्युक्षयेत्ततः ॥ २८॥
पुष्पादिकं क्रमात्सर्वं लिङ्गं वा स्थण्डिलञ्च वा ।

पुरा पूर्वं तालत्रयं [1]हृद्बीजकलात्रयविश्रान्तित्रयरूपं वैखरीशब्दपर्यन्तं स्वात्मनो दद्यात् । तत्स्वीकारकं स्वात्मानं विघ्नानां चतुरण्डगतभेदाभिमानसङ्कल्पानां शान्तये [2]बहिरन्तश्च, पादपाणिहस्तमुखशब्दक्रमेण पातालभूम्यन्तरिक्षगतभेदविघ्नशमनाय कुर्यात् । एवं कृत्वा, मूर्धादिस्थानतादात्म्यापत्तिभाजि हृदयस्थाने एव ~~[illegible]भाजि~~ हृदयबीजेन पञ्चकृत्व उच्चारितेन, जन्मचारप्रवाहलयविच्छित्तिलक्षणाचिदानन्देच्छाज्ञानक्रियालक्षणस्पन्दपञ्चकभाङ् न्यासं शरीरे कुर्यात् । शिखायाश्च तद्देहगतमूर्धादिपञ्चशक्तिकब्रह्मपञ्चकाविभागभूमिभाजः प्राणबुद्धिरूपायाः पञ्चकस्य प्रत्येकं पञ्चकभेदात्प्रथमचरमकोटिद्वयभेदस्पर्शाच्च सप्तविंशतिकृत्व उच्चारितेन हृदयबीजेन हृदयरूपताविश्रमणरूपं नियन्त्रणात्मकं बन्धं कुर्यात् । ततश्च [3]स्थानबीजरूपहृदयमयीकर्तुं दश दिशः सकृत्सकृ [4]दुच्चार्यमाणेन हृदयबीजेन बध्नीयात् हृदयरूपानुसारपरामर्शशेषा एव कुर्यात् । इत्येवं कृत्वा पुष्पादिके

---

१ हृदयबीजेति पाठान्तरम् । २ बहिः स्वपाणिहस्तेति पाठान्तरम् । ३ स्थामरूपीति पाठान्तरम् । ४ उच्चारितेनेति पाठान्तरम् ।

पूजोपकरणेऽपि अर्घ्यपात्रविश्रान्तपरमानन्दरसस्य सप्तविंशतिकृतोच्चारितेन हृदयबीजेन हृदयतादात्म्यं कृत्वा तद्रसाभ्युक्षणद्वारेण हृदयतादात्म्यं कुर्यात् । अनन्तरं पूजाधारस्य लिङ्गस्थण्डिलादेः । एवं सामान्येन भेदं विलाप्य [1]देहप्राणाधिष्ठितेऽप्यस्य (तदुपास्ययागगृहे [illegible]) पूजोपकरणेषु पराकृत्य पूजाधारेऽपि निराकुर्यादिति तात्पर्यम् ॥ २८ ॥

एवं कृते सति पश्चात्तत्र [2]पूजाधारे बाह्याभ्यन्तरादिबहुभेदशतान्यतम[3]रूपे यथारुचि यथासंभवपरिगृहीते[4] लिङ्गस्थण्डिलमण्डलादिके पूज्यपरिकल्पनापूर्वकं [5]पूजास्वरूपमाह

चतुर्दशाभिजप्तेन पुष्पेणासनकल्पना ॥ २९ ॥

तत्र सृष्टिं यजेद्वीरः पुनरेवासनं ततः ।

सृष्टिं तु संपुटीकृत्य पश्चाद्यजनमारभेत् ॥ ३० ॥

सर्वतत्त्वसुसंपूर्णां सर्वावयवशोभिताम् ।

यजेद्देवीं महाभागां सप्तविंशतिमन्त्रिताम् ॥ ३१ ॥

ततः सुगन्धिपुष्पैश्च यथाशक्त्या समर्चयेत् ।

पूजयेत्परया भक्त्या स्वात्मानं च निवेदयेत् ॥३२॥

चतुर्दशेति– जाग्रदादितुर्यावस्थान्तदशाचतुष्टयव्याप्तिशालि यदेतदौकारान्तं बीजस्य वपुः, तावत्यां व्याप्तावासनं कल्पनीयम् । तथाभूतौकारविश्रान्ता[6] आदिक्षान्ता सृष्टिर्विसर्गशक्तिस्वीकृता उपरिवर्तिनी भावनीया । सर्वाभेदघनतु-

---

[1] देहप्राणादिष्विति पाठान्तरम् । २ पूजाधारेष्वपीति क. पाठः । ३ रूपेणेति पाठान्तरम् । ४ परिगृहीतेति पाठान्तरम् । ५ पूजास्वरूपावगमादिति पाठान्तरम् । ६ विश्रान्ता इत्यनन्तरं सर्वैर्वा इति पदमस्ति ।

र्यातीतवृत्तिविश्रान्त्यां तस्यां यत् विश्रमणं—विसर्गः, स एव यागः । तस्यामपि च तुर्यातीतवृत्तौ—विसर्गकलायां स्वीकृतसकलसृष्टिकार्यायां तदेव जाग्रदादिदशाचतुष्कक्रोडीकारकमौकारान्तं रूपं प्रक्षिप्य यजेत् [1]यन्मध्यवर्त्तिविसर्गउभयकोटि[2]गतसद्वृत्तिस्पर्शी,—विसर्गा[3]त्मरूपामत एव सर्वतत्त्वमयीं सर्वैश्च अवयवायमानैर्भावराशिभिर्युक्तां महेशानस्य परभैरवस्य अभेदेन वर्तमानां श्रीपरादेवतामनुत्तरस्वरूपां स्वीकरोति । एतदुक्तं भवति । हृदयस्य मूलभागे [4]सद्वृत्तिरूपे वेद्यांशे जाग्रत्स्वप्नसुषुप्तात्मकातिस्फुटस्फुटास्फुटास्फुटभेदत्रयशालिनि सर्वदा सन्मात्रप्रथमकलावपुषि विश्रम्यावृत्तौ अनुत्तररूपायां शक्तिशिवतत्त्वान्तं क्रमेण तुरीयपदपर्यन्तं विश्रान्तेन क्रमाभिन्नसमस्ततत्त्वस्वीकरणादालब्धव्याप्तिः प्रदर्शिता भवति । ततो विसर्गात्मिका—षोडशी भैरवात्मिका कला यावत् सर्वोत्तीर्णा स्पृश्यते, तावत् तस्यां सर्वमभेदेन आस्ते इति समस्ताभेदरूपा सप्तदशी यासौ कला, सैव अनुत्तररूपा याज्या । तस्यां [5]तथा प्रवर्तिता विश्रान्तिः । स एव परमार्थतो यागः । तद्रूपतासिद्ध्यर्थमेव तु सुगन्धिभिरयत्नत एव हृदयानुप्रवेशशालिभिः पुष्पैः [6]हृदयान्तःस्वरूपसमर्पणादेव हृदयस्य पोषकैर्बाह्याभ्यन्तरैः सर्वैर्द्रव्यैर्यथाशक्तितया, अस्वीकृतशक्तिस्वरूपस्य सङ्कुचितवृत्तेर्यागं प्रत्ययोग्यत्वात्, शक्त्या स्वरूपविकासरूपया तदुपयोगिन्यापि बाह्यया आनन्दिन्या स्नानविलेपनधूपताम्बू-

१ येनेति पाठान्तरम् । २ गतस्वरसद्वृत्ति- इति पाठान्तरम् । ३ सर्वातीतरूपामित्यपि पाठः । ४ सद्व्याप्तिरूपवेद्यांशे इति पाठान्तरम् । ५ तथा इत्यनन्तरमयं पाठोऽधिको दृश्यते - तथा पूरणा [ पूर्णा ] अत एव सप्तविंशतिकृत्वः [ कृत्व ] प्रवर्तितेति । ६ हृदयान्तेति पाठान्तरम् ।

लासवादिसंभारसुभगया बाह्यद्रव्यशक्त्या सम्यगर्चयेत् । कथम्, परया भक्त्या परिमितस्य देहप्राणपुर्यष्टकादेरप्रधानताकरणेन, तद्रूपतानिमज्जनात्मकप्रह्वीभावसंपादनपुरःसरेण तदुक्तरूपयाज्यदेवतात्मकपरसंविद्रूपप्रधानत्वापादनलक्षणेन भजनेन [1]श्रद्धातिशयेन समावेशदायिनेत्यर्थः । परा चासौ भक्तिः । पुष्पादेर्यागोपकरणस्य, स्वात्महृदयहठानुप्रवेशसुन्दरो यो भागो रमणीयः परिमलः, तेन पूर्यमाणमात्मानं सर्वाभेद[2]रूपवृत्तिनिश्चयात्मना नियमेन [3]वेदयेत् । सप्तविंशतिकृत्वः[4] उच्चारणावसरे तत्तत्पुष्पादिबाह्याभ्यन्तरभावराशि[5]संपूर्यमाणाभिन्नस्वरूपं श्रीपरादेवतामयमात्मानं यथा वेत्ति, तथा पुनःपुनरात्मस्वरूपं परामृशेदिति यावत् । एषा [6]तावत्स्फुरणरूपा पूजा । ततश्च जठरीकृतसमस्तभोग्यस्वभावतत्त्वप्रसरस्य भोक्तुर्भगवतो भैरवस्य उद्दीपनात्मना होमेन, तदन्तःकृतसंस्कारशेषभोग्यस्वभावविलापनदहनसामर्थ्यात् परामर्शः कर्तव्यो येन जीर्णन्यायेन संस्कारस्य बीजरूपतया [7]सुषुप्त्यवस्थावत् पुनरुत्थानलक्षणसंस्कारात्मकमूलभेदप्रसवमहाव्याधिशङ्का शाम्यतीति ॥ ३२ ॥

अनेनाभिप्रायेण यजनमुपसंहरन् होमं सूचयति

**एवं यजनमाख्यातमग्निकार्येऽप्ययं विधिः ।**

तत्रापि तिलादीनां शिखासंख्याभिजप्तेन तायेन अभ्युक्षणं स्रुक्स्रुवादीनां वह्नौ "चतुर्दशाभिजप्तेन पुष्पेणासनकल्पना" इत्यादिसंपुटीकरणपर्यन्तं याज्यदेवतासमर्पणम् । ततस्ति-

---

१ सद्य अतिशयेनेति पाठान्तरम् । २ रूपां वृत्तिमिति पाठान्तरम् । ३ नियमयेत् इति पाठान्तरम् । ४ कृत्वोच्चारणावसरे इति पाठान्तरम् । ५ संपूर्यमाणं निजस्वरूपमिति पाठान्तरम् । ६ तावत्पूरणरूपेति पाठान्तरम् । ७ सुषुप्त्यवस्थादृष्टान्तेन [सुषुप्तावृत्तान्तेनेति] पाठान्तरम् ।

लाज्यादिहवनं संपूर्णरूपतया 'आत्मानं च निवेदयेत्' इति व्याख्यातेन क्रमेण पूर्णाहुत्यार्पणमिति अग्निकार्यविधिः । एवं यागहोमोभय[1]मेलनात्मकं पूर्णं हि पूजायाः स्वरूपम् ॥

इयता च स्वात्मरूपा श्रीभगवती परा देवी सम्यक् पूजिता भवति । यतो[2]ऽन्तर्मलस्य [3]विगलनं [4]यावन्न जातं तावत् स्फुटसंविदात्मकत्वं पूरितं न भवति, ततो पूजैवेयमित्याभ्यन्तरसंकल्पनिवृत्त्या बाह्यद्रव्यसंहरणेनैतदाह

कृतपूजाविधिः सम्यक् स्मरन् बीजं प्रसिद्ध्यति ॥३३॥
आद्यन्तरहितं बीजं विकसत्तिथिमध्यगम् ।
हृत्पद्मान्तर्गतं ध्यायेत् सोमांशुं नित्यमभ्यसेत् ॥३४॥

सम्यगिति—उक्तप्रकारेण कृतपूजाविधिः, सम्यगिति च उक्तवक्ष्यमाणोपदेशदिशा बीजं स्मरन्—परामृशन् सम्यक् प्रसिद्ध्यति—परभैरवदेवतावदनेनैव देहेन समस्तविभूतिभाजनं भवति । अस्य हृदयपरामर्शस्याभिनवाभिनवरूपतया भासमानस्य पूर्वपूर्वतरादेः सम्यगनवभासमानत्वात् कालभेदयोगापहस्तनादवभासनीयस्य वस्तुनः सर्वथा [5]आभ्यन्तरस्यैव सतः प्रकाशनात् स्मरणरूपसादृश्यात् स्मरणत्वेन व्यपदेशात् शतृप्रत्ययेन च भूताभिन्नं वर्तमानं दर्शयता इदं सूचितं भवति । तथा अयं परामर्शः स्वीकर्तव्यः, यथा [6]विच्छेदशून्यः सकृद्विभातस्वभावोऽकालकलितः संपद्यते । 'सम्यक्स्मरन्निति (यत्)' उक्तं तत् सम्यक्त्वं यद्यपि पूर्वं दर्शितं

१ मेलनात्मकादिपूर्णं हि इति पाठान्तरम् । २ अन्तर्लीनस्येति क. पाठः । ३ विगलितमिति क. पाठान्तरम् । ४ यावत्स्वात्मरूपं नेति पाठान्तरम् । ५ सर्वदाभ्यन्तरे रहस्य इवेति पाठान्तरम् । ६ विभेदशून्य इति पाठान्तरम् ।

"कालाग्निमादितःकृत्वा ........................ ।" (२१ श्लो०)

इत्यनेन विस्तृतग्रन्थेन, तथापि स्फुटेन रूपेण निर्णीतं निरूपयति 'आद्यन्तरहित'मिति । बीजं वाचकरूपं हृदयं, तस्य वाच्यं सोमांशु-सशक्तिकस्य भगवतो भैरवनाथस्य यामलं, संघट्टप्रभापुञ्जस्तं वाच्यवाचकाभेदक्रमेण अभ्यसेदिति उपदेशः । सोमांशमिति पाठे तु परिपूर्णज्ञानचन्द्रात्मकं प्रकाशानन्दपरमार्थं । तत एव ज्वलनगलनवृत्तिसारसंकोचविकासशक्तिप्रदर्शितविश्वोन्मेषनिमेषशतसंपादनाप्रतिहतसामर्थ्यमूलेन उत्तरोत्तरेण सकार-औकार-अःकारलक्षणेन भागत्रयेण आविष्टमनुत्तरं त्रिकोणात्मकं महाहृदयम् । तस्य च त्रयो भागा अंशाः । सोमश्च अंशश्चेति समाहारे द्वन्द्वः । तदेतत् चतुष्कमाभिमुख्येन स्वसंविद्रूपहृदयविश्रान्तं सत् बुद्धिप्राणदेहभूमिपर्यन्तस्वीकारात्मना समावेशपर्यन्तं क्षिपेत् तद्रूपपरामर्शप्रधानं, विगलितजडभावं तदवष्टम्भैकसारं बुद्धिप्राणदेहेन्द्रियादिकं समस्तं कुलं तत्रैव तद्रूपप्रकाशनविकासवशात् प्रकाशकुलतामायान्तं कुर्यादिति विसर्गचतुष्कसमावेशोऽनेन दर्शितः । तत्र मुख्यमेव तावत् पूर्णहृदयस्वरूपमाह आद्यन्ताभ्यामुत्पत्तिविनाशाभ्यां रहितं यत् विश्वस्य बीजं, तत एव बीजत्वात् विश्वात्मना विकसत्, अनवरतं विकासं गच्छत्, विश्वस्य कालरूपाणां तिथीनां मध्यगं सामान्यरूपतया अविभागपरामर्शरूपं स्वस्मिन्हृदये संविल्लक्षणे संकोचविकासलीलायोगात्कमलरूपेऽन्तर्गतं, तां संविदं प्रविश्य सङ्कोचहठापसरणकारितया, विकासयत्, ध्यायेत् नित्यम् । अतश्च पूर्णभैरवतासिद्धिः । उत्थानापेक्षया पाठापेक्षया च । आद्यन्तौ स्वरव्यञ्जनरूपौ । तद्रहितं यत् बीजं

१ तदेवेति पाठान्तरम् । २ विगृह्येति पाठान्तरम् ।

विसर्गात्मकं यतश्च अन्या पञ्चदश तिथयो विकसन्ति, तच्च सर्वतिथीनां[1] मध्यगतम् । तत् हृदयपद्मे पूर्ववत् ध्यायेत् । ‡एतद्वीजापेक्षया आद्यन्ताभ्यां व्यञ्जनविसर्गाभ्यां रहितं त्रिशूलवृत्तिमात्ररूपं, विकसत् तिथिषु प्राणापानकलासु मध्यगतं तत्प्राणरूपसमावेशकारि तद्द्वारेण देहं समाविशत् बीजरूपेण हृदि ध्यायेत् । अवर्गे स्थिता वर्णाः । आदयः स्वराः, अन्त इति यः 'तदन्तः कालयोगेन' इत्यत्र विसर्ग उक्तः; तेन स्वरविसर्गाभ्यां रहितमनच्कसद्वृत्तिरूपं बीजं तथैव [2]विकासिनीषु प्राणापानकलासु मध्यगतं देहे हृदि ध्यायेत् ॥ ३४ ॥

[3]अत्र फलमाह—

यान्यान् कामयते कामांस्तान्ताञ्छीघ्रमवाप्नुयात् ।
अज्ञः प्रत्यक्षतामेति[4] सर्वज्ञत्वं न संशयः ॥ ३५ ॥
एवं मन्त्रफलावाप्तिरित्येतद्रुद्रयामलम् ।
एतदभ्यसतः सिद्धिः सर्वज्ञत्वमवाप्नुयात् ॥ ३६ ॥

एताश्च सिद्धय उक्ता एव, एषु 'कालाग्निमादितः०' इति अत्र 'शीघ्रमिति' '[5]मुहूर्तं स्मरते यस्तु' इति '[6]अस्मात् प्रत्यक्षतामेति सर्वज्ञत्वं' इति च प्रहरत्रयमात्रेण सिद्धिरुक्ता । प्रहरचतुष्काविभेदेन समावेशे तु सर्वस्मिन्नेव प्रकाशमये दिनरूपतां गते शर्वरि सङ्कोचे क्षीणे अनेनैव देहेन भैरववत् सर्वज्ञो भवति । एतदुपसंहरति— 'एवमिति' एवं सर्वेषां

---

१ बीजानामिति पाठान्तरम् । २ विकसत्सु इति पाठान्तरम् । ३ तत्र क. पाठः । ४ यातीति पाठान्तरम् । ५ मुहूर्तादिनामिति पाठान्तरम् । ६ अग्नेः प्रत्यक्षतामिति पाठान्तरम् ।

‡ अयं पाठोऽधिको दृश्यते:— इह विशेषभोग्यस्वभावविलापनदहनपरामर्शः कर्तव्यः विसर्गांशसमावेशः ।

[1]मन्त्रफलानां [2]परापरासिद्धिरूपाणां यस्मादित एव अनुत्तरबीजादवाप्तिः, अतो हेतोरेतदेव सपादकोटिरुद्रयामलफलसंपादकत्वात् रुद्रयामलं शिवशक्त्योरत्र नित्यसंघट्टात् । अत एव एतदभ्यस्यतः संक्षेपतः फलं सर्वज्ञत्वसर्वकर्तृत्वलक्षणभैरवरूपतालाभ इत्याह

'एतदभ्यस्यतः............'

इति । अभ्यासेन विनापि तु जीवन्मुक्तता परमा कौलिकी सिद्धिरिति शिवम् ॥ ३६ ॥

:० ०:—

यदालूनविशीर्णं सद्गोपितं तन्त्रभाषया ।
अत्राभिनवगुप्तेन भासितं[3] तदनुत्तरम् ॥ १ ॥
एतद्विवेकनिष्ठास्तु मा भूवन्[4] भ्रमभाजनम् ।
सच्छिष्याः प्राप्नुतां[5]द्यैव भैरवीभावसंपदम् ॥ २ ॥
संपूर्णानुत्तरानन्दयोगक्षेमादि[6] जानताम् ।
त्रिलोकीकवलीकारसमावेशविशारदाः ॥ ३ ॥
येषां सदात्मना पूर्णमिच्छाज्ञानक्रियात्मना ।
विसृज्यते यतश्चेमां वन्देऽनुत्तरसंविदम् ॥ ४ ॥

---

१ मन्त्रकलानामिति पाठान्तरम् ।
२ परापराणां कौलिकीसिद्धि इत्यपि पाठः ।
३ भाषितमित्यपि पाठः ।
४ भाजनाः इति पाठान्तरम् ।
५ प्राप्नुयादेव इत्यपि पाठः ।
६ भिजायतामिति पाठान्तरम् ।

always fresh energy of
Lord Shiv



अभिनवरूपाशक्ति-
स्तद्गुप्तो यो महेश्वरो देवः ।
protected by
तदुभययामलरूप-
मभिनवगुप्तं शिवं वन्दे ॥ ५ ॥

6/7/74

समाप्ता इयमनुत्तरतत्त्वविमर्शिनी
परात्रीशिकालघुवृत्तिः—
त्रिनयनचरणसरोरुहचिन्तनलब्धप्रसिद्धीनाम-
भिनवगुप्तपादानां कृतिरिति शिवम् ॥

—:-❀-:—



**KASHMIR SERIES OF TEXTS AND STUDIES.**
No. LXIX.

---

# THE PARĀTRIŚIKĀ VIVRITI OF RĀJĀNAKA LAKSHMIRĀMA

---

EDITED BY
PANDIT JAGADDHARA ZĀDU SHĀSTRI,
M. A., M. O. L., H. H.,
SUPERINTENDENT RESEARCH DEPARTMENT
HIS HIGHNESS' GOVERNMENT,
JAMMU & KASHMIR,
SRINAGAR.

---

Published under the authority of the Government of
His Highness Rājarājesvara Mahārājādhirāj
Sri MAHĀRĀJĀ HARISINGHJI BAHĀDUR,
G.C.S.I., G.C.I.E., K.C.V.O., LL.D.
MAHĀRĀJĀ OF JAMMU & KASHMIR



SRINAGAR.
Printed at the Mercantile Press
1947 A.D.

कश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६६

# श्रीपरात्रीशिका

राजानक-पण्डितलक्ष्मीरामकृतविवृत्युपेता ।

श्रीराजराजेश्वर-महाराजाधिराज-कश्मीरनरेन्द्र-
श्रीहरिसिंहजी-बहादुराज्ञया
रिसर्चकार्यालयाध्यक्ष-पण्डितजगद्धरज़ाडूशास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संशोधनादिसंस्करणोत्तरं
संपाद्य
श्रीनगरे 'मर्कण्टाइल' मुद्रणालये मुद्रापयित्वा
प्राकाश्यमुपनीतम् ।



संवत् २००४ कश्मीर-श्रीनगर खैस्ताब्दः १९४७



श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन् सर्वदेश्यान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत् सर्ववन्द्यत्वमाप ॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्सवदायिनम् ॥ २ ॥

# परात्रीशिका ।



राजानक–पण्डितलक्ष्मीरामकृतविवृत्युपेता ।



यतः प्रवृत्ताः सरित इच्छासंवित्क्रियात्मिकाः ।
ता यमावेदयन्त्येव तं वन्दे चित्स्वधार्णवम् ।

श्रीपरमशिवभट्टारकचित्स्वधासमुद्रस्य पूर्णस्वरूपस्य ज्ञानक्रियाशक्त्योरनुन्मीलनावस्थायां किञ्चित् स्पन्दनरूपं तत् संघट्टात्मकं वर्णानां मूलकारणं अकारादिहकारान्तवर्णप्रत्याहारलक्षणं पराहन्तास्वरूपमहमिति चिन्मयं स्रोतः प्रथमं विकासमापन्नं, ततः सिसृक्षया अन्योन्यमद्धा अवियुक्तज्ञानक्रियात्मकं परमशिवेच्छयैव परस्परं गुणप्रधानभावेन विभिन्नं सरिद्युग्मं प्रसृतम् । ज्ञानसरितश्चित्तबुद्धिलक्षणान्तःकरणं[1] स्रोतः प्रसृतं, तस्मात् ज्ञानेन्द्रियप्रणाल्यो निर्गताः । क्रियासरितो दशविधप्राणस्रोतः प्रसृतं, तस्मात् कर्मेन्द्रियप्रणाल्यो निर्गताः । यत उक्तम्—

'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया' ।

इति । तत्र ज्ञानशक्तिस्रोतोद्वारा शिवार्णवप्रवेशोपायं निर्णेतुमुद्यताः शैववेदान्तिसांख्य[2]तार्किकादयः । क्रियाशक्तिस्रो-

---

१ 'करणस्रोतः' ख. पाठः । २ 'सांख्यादयः' क. पाठः ।

तोद्धारा निर्णेतुमुद्युक्ताः पातञ्जलहठयोगि[1]पूर्वमीमांसकादयः[2]। भैरवभट्टारकस्तु भक्तजनमनुग्रहीतुं स्पन्दात्मकेन परापश्यन्त्यादिवाक्चतुष्टयलक्षणेन स्रोतसा राजयोगशब्दवाच्येन ज्ञानक्रियाशक्तिसंघट्टात्मकेन अकारादिहकारान्तवर्णविकासात्मकमधिजिगमिषता अनुत्तराख्यं ज्ञानक्रियात्मकमध्वानमुपदिदिक्षति भैरवीप्रश्नप्रस्तावनया । तथाच श्रुतिः—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

इति ।

श्रीभैरवी

अनुत्तरं कथं देव सद्यः कौलिकसिद्धिदम् ।
येन विज्ञातमात्रेण खेचरीसमतां व्रजेत् ॥ १ ॥

भोः देव अनुत्तरं न विद्यते प्रकृष्टमुत्तरं यतस्तदनुत्तरं चिद्धनं वस्तु कौलिकसिद्धिदं कुले देहे भवा कौलिकी सिद्धिश्चिदैकात्म्यं तां ददातीति तादृशम कौलिकीसिद्धिर्जडस्यापि देहादेश्चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्तिः । उक्तं च—

'देहादिषु चेत्यमानेष्वपि चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्तिः'
(शक्तिसू० १६)

कथं केन प्रकारेण भवेत् सद्य इति परिज्ञानक्षण एव । तमुपायं वद इत्यर्थः । येन उपायन अनुभूतमात्रेण अयं नरः खचरीसमतां खेचरीणां तव चिदेकरूपस्य शक्तीनां साम्यं स्वातन्त्र्यरूपमाप्नोति मुक्तो भवतीत्यर्थः ॥ १ ॥

एतद्गुह्यं महागुह्यं कथयस्व मम प्रभो ।

---

१ 'योगवादि' ख. पाठः । २ 'कधर्मशास्त्राद्यः' ख. पाठः ।

हृदयस्था तु या शक्तिः कौलिकी कुलनायिका ॥ २ ॥
तां मे कथय देवेश येन तृप्तिं लभाम्यहम् ।

यद्यप्येतत् गुह्यं गोप्यं ततोऽपि महागुह्यं गुह्यतरं हे प्रभो प्रभवनशील ! तदपि मम त्वदभिन्नायाः कथयस्व वैखरीवाचा बोधय भक्तानुग्रहार्थम् । वैखरीलक्षणं तु वाक्यपदीये-

'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरीवाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥'

इति । तथा या चिच्छक्तिर्हृदयस्था हृदये स्थिता कौलिकी देहादिव्याप्त्री कुलनायिका कुलस्य देहस्य नायिका चिदैकात्म्योपपादिका तां शक्तिं च स्वरूपतो मे कथय, हे देव येन श्रुतेन तृप्तिं निराकाङ्क्षतां लभेऽहम् ॥ २ ॥

श्रीभैरवः

शृणु देवि महाभागे उत्तरस्याप्यनुत्तरम् ॥ ३ ॥
कौलिकोऽयं विधिर्देवि मम हृद्व्योम्न्यवस्थितः ।
कथयामि सुरेशानि सद्यः कौलिकसिद्धिदम् ॥ ४ ॥

हे देवि ! उत्तरस्य चित्प्रकाशस्य अपि यदनुत्तरमुत्कृष्टं विमर्शात्मकं स्वरूपं तत् शृणु । अयं विधिरुपायः कौलिको जडस्य देहादेश्चिदेकरूपतासंपादकः, अग्निरिव आयसपिण्डस्य अग्नितोपपादकः । किन्तु अद्यावधि केनापि न पृष्टोऽयं विधिः, अतो मम हृद्व्योम्नि एव अवस्थितो न बहिः प्रकाशितः, सद्यः कौलिकसिद्धिदं देहादेश्चिदैकात्म्योपपादकमुपायं कथयामि ब्रवीमि ॥ ४ ॥

तदेव वक्तुमुपक्रमते—

अथाद्यास्तिथयः सर्वे स्वरा बिन्द्ववसानगाः ।
तदन्तः कालयोगेन सोमसूर्यौ प्रकीर्तितौ ॥ ५ ॥

अथ इत्युपक्रमे आद्या अकाराद्या बिन्द्ववसानगा अंका-

रपर्यन्तास्तिथयः पञ्चदश वर्णाः स्वरास्तत्संज्ञकाः तदन्तः तेषां वर्णानां उच्चारमध्ये कालयोगेन कालः कलना सूक्ष्म-क्रियाशक्तिस्तस्य योगेन सम्बन्धेन

'प्राक् संवित् प्राणे परिणता'

इत्युक्तेः, सोमसूर्यौ प्राणापानौ प्रकीर्तितौ प्रवृत्तिहेतू प्रोक्तौ । अथच तिथयः प्रतिपदाद्याः सूर्याचन्द्रमसोः सन्नि-कर्षविकर्षाभ्यां कालयोगेन च प्रवर्तन्ते इति बाह्योऽर्थः श्लिष्टः सुगमः ॥ ५ ॥

अथ वर्णानां वाच्यवाचकतया सर्वात्मकत्वं [1]वक्तुं प्रक्रमते--

पृथिव्यादीनि तत्त्वानि पुरुषान्तानि पञ्चसु ।
क्रमात् कादिषु वर्गेषु[2] मकारान्तेषु सुव्रते ॥ ६ ॥

अकारादिविसर्गान्तं शिवतत्त्वं कादिङान्तं धरादिन-भोन्तं भूतपञ्चकं, चादिञान्तं गन्धादिशब्दान्तं तन्मात्रप-ञ्चकम्, टादिणान्तं पादादिवागन्तं कर्माक्षपञ्चकम्, ता-दिनान्तं घ्राणादि श्रोत्रान्तं धीन्द्रियपञ्चकम्, पादिमान्तं मनोऽहङ्कारबुद्धिप्रकृतिपुरुषा[3]ख्यपञ्चकम् ॥ ६ ॥

वाय्वग्निसलिलेन्द्राणां धारणानां चतुष्टयम् ।
तदूर्ध्वं शादि विख्यातं पुरस्ताद्ब्रह्मपञ्चकम् ॥ ७ ॥

वायवी-आग्नेयी-वारुणी-ऐन्द्री-(पार्थिवी) धारणा-स्तासां स्था[4]नवाचकं यादि चतुष्टयं, तदूर्ध्वं शादीनां प-ञ्चानां ब्रह्मपञ्चकं ईशानतत्पुरुषाघोरवामदेवसद्योजाताख्यं विख्यातं वाच्यम् । पश्यन्त्यात्मकसत्त्वानुवृत्त्या य स्पर्शः,

---

१ 'प्राह' क. पाठः । २ 'वर्गेषु' क. पाठः । ३ 'रुषपञ्च' क. पाठः । ४ 'स्थानं' क. पाठः ।

र रूपं, ल रसः, व गन्धः, देहव्यापकसूर्यरूपप्रणवचिन्तनं पार्थिवीधारणा, दक्षिणपादाङ्गुष्ठोत्थितकालाग्निज्वालाभिर्बाह्यान्तरदेहस्य भस्मीभूतत्वभावना आग्नेयी, चण्डवायुना शारीरभस्मनो दशदिग्गतत्वभावनं वायवी, द्वादशान्तपतितेन शाक्तामृतेन तत्स्थानस्य क्षालितत्वभावनं, ततो जीवस्य कुण्डलिन्या सह व्योमस्थितस्य प्राणप्रतिष्ठया अमृतेन हृद्यवतारणं वारुणीधारणा ॥ ७ ॥

अमूला तत्क्रमाज्ज्ञेया क्षान्ता सृष्टिरुदाहृता ।

अकारादिक्षकारान्ता वर्णसृष्टिर्वर्णक्रमेण अमूला अकारमूला अकारसमवायिकारणका कथिता ज्ञेया । अकारस्य सर्ववर्णात्मकत्वं श्रुतिराह—

'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वीर्नानारूपा भवति ।'

इति । गीतास्वपि—

'अक्षराणामकारोऽस्मि ........................ ।' (१०।३३)

इति । तथाहि— परमेश्वरस्य स्वात्मविमर्शः अ इति, तत्रैव आनन्दशक्तिः, आ इति, पूर्णेच्छा इ इति, इच्छाज्ञानोन्मुखेशनं ई इति, भावोन्मेषोन्मुखं ज्ञानं उ इति, अनुत्तरसंवित्संकोचादूनीभूता ऊ इति, सैव स्वरूपविस्मरणेन शून्यीभूतेव[1] बहिर्मुखा ऋॠ इति, निश्चलशून्यताप्त्या लृॡ इति, एतच्चतुष्कं शून्यत्वाप्त्या दग्धबीजमिव षण्ठरूपं भाष्यते, नतु सर्वथा बीजत्वव्यपगमः । अनुत्तरानन्दयोरिच्छेशनयोश्च मिथः संयोगे ए इति, उक्तंच—

'अवर्णइवर्णे ए' इति (का० वृत्ति १।२।२)

---

१ 'शून्यभूते' क. पाठः ।

तदेवं रूपमनुवसत् ऐ इति, अ आ उ ऊ ओ इति, अ आ ओ इति, औ इति, उन्मेषेऽपि वाच्यम् । एवमिच्छाज्ञाने अनुत्तरपदलीने बिन्दुमात्रशेषतया अं इति, स एव परमेश्वरः शाक्तविसर्गप्रधानतया अः इति । धरादिशक्त्यन्तं कादिक्षान्तविमर्शशक्तिः षोडशी कला इति गीयते । उक्तंच तन्त्रालोके

'पुरुषे षोडशकले तामाहुः परमां कलाम्'।

इति । अकारस्य घनत्वं कवर्गः कण्ठ्यत्वात्, एवं इकारस्य चवर्गस्तालव्यत्वात्, उकारस्य पवर्ग औष्ठ्यत्वात्, ऋकारस्य टवर्गो मूर्धन्यत्वात्, ऌकारस्य तवर्गो दन्त्यत्वात्, यशौ चवर्गस्यान्तः रषौ टवर्गस्य लसौ तवर्गस्य, वकारोऽपि तपवर्गयोर्घनता । एवममूर्तस्यापि [1]चिद्घनस्य क्रियाशक्तिरूपतैव, स्वराः शिवबीजात्मकाः शाक्तरूपं कुसुमतया तिष्ठन्तः कादयः क्षान्ता योनिरित्यभिधीयते, एवं वर्णानां घनीभावोऽपरा[2]वाक्वपुषि तिष्ठन् वैखरीरूपे स्फुटी भवति ॥ ८ ॥

सर्वेषामेव मन्त्राणां विद्यानां च यशस्विनि ॥ ८ ॥
इयं योनि समाख्याता सर्वतन्त्रेषु सर्वथा ।

इयं वर्णसृष्टिरादिः क्षान्ता, योनिरुत्पत्तिकारणम् । उक्तंच महार्थमञ्जर्याम्

'मननमये निजविभवे
निजसङ्कोचभये त्राणमयी ।
कवलितविश्वविकल्पा
अनुभूतिः कापि मन्त्रशब्दार्थः ॥'

---

१ 'चिन्मात्रस्य' ख. । २ 'वारवपु' क. पाठः ।

इति ॥ ८ ॥

अथ महामन्त्रस्योद्धारमाह--

चतुर्दशयुतं भद्रे तिथीशान्तसमन्वितम् ॥ ९ ॥
तृतीयं ब्रह्म सुश्रोणि हृदयं भैरवात्मनः ।

अघोर इति त्र्यक्षरं स्वरेषु वर्तमानं, तृतीयं ब्रह्म अघोराख्यं यत् चतुर्दशस्वरेषु युतं संबद्धं स अकारः तिथिः पञ्चदशः स्वरः अंकारः तेन युतश्चासौ शान्तः शवर्गान्तो ह्रः तेन अहमिति यो विमर्शः पश्यन्तीवाग्रूपः वाक्यपदीये—

'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमः ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥'

इत्येवं लक्षितः तत्

'परा ब्रह्मैव केवला ।'

इत्युक्तेः परावाग्रूपस्य भैरवात्मनः सर्वव्यापकस्य चित्प्रकाशस्य हृदयं सारभूतो महामन्त्रः । तिथी 'कृदिकारादक्तिनः' (ग० पा० ५० सू०) इति वा ङीप् । यथा रजनी इति । उक्तं च—

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।'
(अ० प्र० सि० २२)

इति । तथा—

'सा स्फुरत्ता महासत्ता.................. ।

इति ।

'.....................हृदयं परमेष्ठिनः ।' (ई०प्र०१।५।१४)

इति च । तथा—

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।

प्रकाशोऽर्थोपरक्तोऽपि स्फुटिकादिजडोपमः ॥'

(ई० प्र० १।५।११)

इति । अथच तृतीयं ब्रह्म अघोरमन्त्रः चित्परामर्शयुतो भैरवात्मनः स्वच्छन्दभैरवस्य हृदयं सारभूतो महामन्त्रः ॥९॥

एतन्नायोगिनीजातो नारुद्रो लभते स्फुटम् ॥१०॥

हृदयं देवदेवस्य सद्यो योगविमोक्षदम् ।

एतदहन्तापरामर्शात्मकं सर्ववेद्यं किमपि परमं हृदयं रहस्यभूतं देवदेवस्य चिदात्मनो नारुद्रो योगिनीव्यतिरिक्त-जातो न स्फुटं लभते नोपलभते । यश्च रुद्रांशो भावि-भैरवीभावो न स्यात् सच नोपलभते । स्फुटमिति देहाहंभाव-न्यक्कारेण चित्प्राधान्येन यश्चोपलभते स योगिनीजातो रुद्रांशश्च प्रत्यासन्नभैरवीभावः सद्यो लाभक्षण एव योग-विमोक्षदं योगश्चिदात्मसमापत्तिर्विमोक्षश्चिदेकमयता तद्द दातीति ॥ १० ॥

पश्यन्तीवाचोच्चारे कृतेऽस्य महिमानमाह—

अस्योच्चारे कृते सम्यङ्मन्त्रमुद्रागणो महान् ॥११॥

सद्यस्तन्मुखतामेति स्वदेहावेशलक्षणम् ।

अस्य महामन्त्रस्य अहमित्येवंलक्षणस्य अघोरमन्त्रस्य च उच्चारे अविरतं तत्तद्देवतानुसंधानेन परामर्शे सम्यगिति देहाहंभावविस्मरणपूर्वं चित्प्राधान्येन कृते सति मन्त्रमुद्रा-गणो महान् मन्त्र[1]मुद्रादेवतासमूहः सद्यो विमर्शक्षण एव तन्मुखतां तस्य योगिनः संमुखत्वमेति, कथं स्वदेहावेश-लक्षणं स्वदेहे योगिदेहे आवेशो देवानां लक्षणं लक्ष्म यत्र संमुखत्वप्राप्तौ ॥ ११ ॥

---

१ 'मन्त्रदेवता' क. पाठः ।

अथ समाधेः समयोगेन प्रभावमाह—

मुहूर्तं स्मरते यस्तु चुम्भकेनाभिमुद्रितः ॥ १२ ॥

संबध्नाति तदा सर्वं मन्त्रमुद्रागणं नरः ।

अतीतानागतानर्थान् पृष्टोऽसौ कथयत्यपि ॥ १३ ॥

यो योगी चुम्बकेन शाक्तस्पर्शेन अभिमुद्रितः संबद्धो मुहूर्तं घटिकायुग्मं चिदात्मानं स्मरते निरन्तरं अहमित्येवं परामृशति, स एव नरो मन्त्रमुद्रागणं मन्त्राणां मुद्राणां च देवगणं तदा स्वस्वामिभावेन संबध्नाति प्रत्यक्षीकुरुते, स एव व्युत्थाने केनाचित् शुभाशुभं स्वस्य जगतो वा पृष्टः सन् अतीतानागतान् भूतभविष्यत्कालेन व्यवहितान् अर्थान् प्रयोजनानि कथयति तस्य वाणी न व्यभिचरतीत्यर्थः ॥ १३ ॥

प्रहराद्यदभिप्रेतं देवतारूपमुच्चरन् ।

साक्षात्पश्यत्यसंदिग्धमाकृष्टं रुद्रशक्तिभिः ॥ १४ ॥

प्रहरादिति ल्यब्लोपे पञ्चमी, प्रहरमात्रं देवतारूपं चिदात्मानमधिष्ठाय समुच्चरन् परामृशन् समाधिस्थो योगी यद्यदभिप्रेतमभिमतमिन्द्रादिदेवतारूपं स्यात् तत्तद्देवतारूपमसंदिग्धं साक्षात् पश्यति रुद्रशक्तिभिः परमेशशक्तिभिर्ब्राह्म्यादिभिराकृष्टं नोदितम् ॥ १४ ॥

प्रहरद्वयमात्रेण व्योमस्थो जायते स्मरन् ।

त्रयेण मातरः सर्वा योगेश्वर्यो महाबलाः ॥ १५ ॥

वीरा वीरेश्वराः सिद्धा बलवाञ्छाकिनीगणः ।

आगत्य समयं लब्ध्वा भैरवेण प्रचोदिताः ॥ १६ ॥

यच्छन्ति परमां सिद्धिं फलं यद्वा समीहितम् ।

प्रहरद्वयं चेत स्मरन् समाधौ विश्रान्तो योगी व्यो-

मस्थो जायते खगतिं प्राप्नोति समाधिविश्रान्तत्वात्, प्रहरत्रयं चेत् समाधिविश्रान्तस्तदा भैरवनाथादाज्ञामादाय तेन प्रेरिता मातरो ब्राह्म्याद्याः पञ्चविधकृतकारिण्यः वीरा योगिनो वीरेश्वरा योगीन्द्राः सिद्धाः कपिलादयः शाकिनीगणो योगिनीसमूहः तस्मै प्रहरत्रयं समाधिस्थाय योगिने समीपमागत्य परमां पूर्णां सिद्धिं स्वस्याः प्रकृतेर्यथेष्टविनियोक्तृत्वलक्षणं स्वातन्त्र्यं, तथा यदन्यत् काङ्क्षितं फलं तद् दास्यन्ति ॥ १६ ॥

अनेन सिद्धाः सेत्स्यन्ति साधयन्ति च मन्त्रिणः ॥१७॥
यत् किञ्चिद्भैरवेतन्त्रे सर्वमस्मात् प्रसिध्यति ।

अनेनै[1]वाहमिति- चिदानन्दविश्रान्तिलक्षणेन[2] समाधिना अघोरमन्त्रेण च सिद्धा योगिनो जन्ममोक्षान्यतरपरिग्रहे स्वतन्त्राः संपद्यन्ते साधयन्ति अन्यानपि सिद्धान् संपादयिष्यन्ति । तथा अस्यैव महामन्त्रोपासकस्य यत् किञ्चिद् भैरवेतन्त्रे फलमुक्तं तत् सर्वमस्मात् महामन्त्रोपासनरूपात् समाधेरघोरमन्त्रतश्च सिध्यति ॥ १७ ॥

अदृष्टमण्डलोऽप्येवं यः कश्चिद्वेत्ति तत्त्वतः ॥ १८ ॥
स सिद्धिभाग् भवेन्नित्यं स योगी सच दीक्षितः ।

यः कश्चिदिति वर्णाश्रमविभागाधिकारव्यतिरिक्तस्तत्त्वतो देहाहंभावन्यक्कारेण एवं उक्तप्रकारेण महामन्त्रं वेत्ति, सोऽदृष्टमण्डलोऽपि दीक्षाविधाने यत् प्रयुक्तं मण्डलं कलशयागादिदेवताचक्रं तत् तेनादृष्टमपि, एवमीदृशः सन्नपि सिद्धिभाक् नित्ययोगी दीक्षितश्च भवति । उक्तं च—

'स्वस्वरूपपरिज्ञानं मन्त्रोऽयं पारमार्थिकः ।

---

१ 'अनेनाह' क. । २ 'क्षणसमा०' क. पाठः ।

दीक्षेयमेष योगश्च क्रियाया अप्यनुत्तरः ॥ '

इति । योगो नवनाभसंज्ञः, कलशमण्डलाग्निसाधन- चरुसाधन- शिष्यसंस्कार- न्यासविधान- पाशसूत्रसंस्कार-स्वप्नपरीक्षा- यागविधान- रुद्रांशापादन- कलापञ्चकशोधन-योजनिकोपदेशाभिषेक- पवित्रारोपण- विसर्जनान्तायाः क्रियायाः कर्मानुष्ठानादपि अनुत्तरोऽत्युत्कृष्टः ॥ १८ ॥

अनेन ज्ञातमात्रेण ज्ञायते सर्वशक्तिभिः ॥ १९ ॥
शाकिनीकुलसामान्यो भवेद्योगं विनापि हि ।
अविधिज्ञो विधानज्ञो जायते यजनं प्रति ॥ २० ॥

अनेन महामन्त्रेण भैरवेश्वरस्य सर्वाभिः शक्तिभिर्ज्ञायते स्वकीयत्वे सः, तथा योगं विनापि व्युत्थाने वर्तमानः शाकिनीकुलसामान्यः शाकिनीकुलस्य योगिनीगणस्य सामान्यः साधारणः क्रीडनको भवेत् । पूर्वमविधिज्ञोऽपि अनेनै[1]व महामन्त्रेण ज्ञातेन दीक्षाया[2] यजनं प्रति विधानज्ञो जायते ॥ २० ॥

कालाग्निमादितः कृत्वा मायान्तं ब्रह्मदेहगम् ।
शिवो विश्वाद्यनन्तान्तः परं शक्तित्रयं मतम् ॥२१॥

निवृत्तिकलायाः पादाग्राद्गुल्फान्तं व्याप्तिः, तत्रैव भूतत्त्वस्थितिः ब्रह्मणोऽधिकृतिः । प्रतिष्ठाया गुल्फान्नाभ्यन्तं व्याप्तिः, तत्र जलतत्त्वमारभ्य प्रकृतितत्त्वान्तं चतुर्विंशतितत्त्वस्थितिः तत्र विष्णोरधिकृतिः । विद्याया नाभेस्तालवन्तं व्याप्तिः, तत्र पुरुषतत्त्वमारभ्य मायातत्त्वान्तं सप्ततत्त्वस्थितिः, तत्र रुद्रस्याधिकृतिः । शान्ताकलायास्तालुनो बिन्द्वन्तं व्याप्तिः तत्र शुद्धविद्यादितत्त्वत्रयस्थितिः, तत्र ईश्व-

---

१ 'अनेन महा' क. पाठः । २ 'दीक्षायज' क. ।

रस्याधिकृतः ।

पुरुषनियतिकालरागविद्याकलामायातत्त्वानि सप्त, शुद्धविद्यातत्त्वेश्वरतत्त्वसदाशिवाख्यानि त्रीणि तत्त्वानि, भूतानि पञ्च, धीन्द्रियानि पञ्च, कर्मेन्द्रियानि पञ्च, विषयाः पञ्च, अन्तःकरणानि त्रीणि, प्रकृतिरेका, निवृत्तावष्टोत्तरशतं भुवनानि, प्रतिष्ठायां षट्पञ्चाशत्, विद्यायां सप्तविंशतिः, शान्तायां सप्तदश, शान्त्यतीतायां षोडश, एवं सर्वाणि भुवनानि चतुर्विंशत्यधिकं द्विशतम् । शान्त्यतीताया बिन्दोः करन्ध्रान्तं व्याप्तिः, तत्र अनन्तव्याप्ताशिवतत्त्वस्थितिः तत्र अनाश्रितशिवस्याधिकृतिः । अत्र तु सङ्क्षेपेणैव एतत्क्रमः । कालाग्नि कालाग्निस्थानं पादाग्रं आदितः कृत्वा तदारभ्य मायान्तं मायातत्त्वान्तं ब्रह्मेत्युपलक्षणं तेन ब्रह्मविष्णुदेहगमिति तात्वन्तं स्थितौ, ब्रह्म इति नपुंसको निर्देश ऐशः पाठः । शिवो मायोर्ध्वे विश्वाद्यनन्तान्तो विश्वभुवनाच्छुद्धविद्यादेरारभ्य अनन्तान्तो अनन्तभुवनावधि अधिष्ठाता स्थितः, अतः परं शक्तित्रयं विद्या– शान्ता– शान्त्यतीतादित्रयं सूक्ष्ममुत्कृष्टं च मतम् ॥ २१ ॥

कुत इत्याह—

तदन्तर्वर्ति यत्किञ्चित् शुद्धमार्गे व्यवस्थितम् ।
अणुर्विशुद्धमचिरादैश्वरं ज्ञानमश्नुते ॥ २२ ॥

तस्य शक्तित्रयस्य अन्तर्वर्ति यदध्वरूपं तत्त्वभुवना[1]वस्थादिमध्यस्थितं तत् शुद्धमार्गे व्यवस्थितं मायाकालुष्यतानवतारतम्यादणुर्जीवो योगमभ्यस्यन् शुद्धाध्वनि प्रतिष्ठितोऽचिराद् ऐश्वरं ज्ञानं विशुद्धं भेदप्रथारहितं प्राप्नोति ।

---

१ 'नादि' क. पाठः ।

षडध्वानः वर्णपदमन्त्रभुवनतत्त्वकलात्मानः, त्रयो वाचकास्त्रयो वाच्याः ॥ २२ ॥

तच्चोदकः शिवो ज्ञेयः सर्वज्ञः परमेश्वरः ।

सर्वगो निर्मलः स्वच्छस्तृप्तः स्वायतनः शुचिः ॥ २३ ॥

तच्चोदकः तस्य ईश्वरज्ञानस्य चोदकोऽनुग्रहभाजनं कञ्चिदेव योगिवर्यं प्रति प्रयोजकः शिवकलाधिष्ठातृज्ञेयः, यतः स एव सर्वज्ञः । यदुक्तम्—

'एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः ।'

इति । परमेश्वरोऽदेयमपि दातुं समर्थः । सर्वगो व्यापकः । सर्वगो मायीयमलरहितः । स्वच्छः आणवमलरहितः । तृप्तः कार्ममलरहितत्वात् निराकाङ्क्षः । स्वायतनश्चिदात्मनि प्रतिष्ठितः । शुचिर्निर्वासनः । ईताद्दगन्यो देवः कोऽपि नास्ति । मलत्रयलक्षणं श्रीप्रत्यभिज्ञायाम्—

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।

द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥

भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम् ।

कर्तर्यबोधे कार्मं तु मायाशक्त्यैव तत्त्रयम् ॥'

(ई० प्र० ३·२·४)

इति ॥ २३ ॥

ननु अणोर्जीवस्य सङ्कुचितस्य पूर्ण[1]व्यापकेश्वरज्ञानं दुर्घटमनुमीयते जलबिन्दोरिवार्णवत्वप्राप्तिरित्यतो दृष्टान्तनिदर्शनेन सम्यग्बोधयति—

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।

तथा हृदयबीजस्थं जगदेतच्चराचरम् ॥ २४ ॥

---

१ 'पूर्णेश्वर' क. पाठः ।

न्यग्रोधबीजे वटवृक्षबीजे शक्तिरूपो हृदयबीजं शुद्ध-चित्परामर्शात्मपरारूपं तत्र स्थितं चराचरात्मकं जगद्वि-स्तीर्णं हृयदबीजस्थं सूक्ष्मरूपेण स्थितमतो न किञ्चिदसम-ञ्जसम् ॥ २४ ॥

एवं यो वेत्ति तत्त्वेन तस्य निर्वाणगामिनी ।

दीक्षा भवत्यसंदिग्धा तिलाज्याहुतिवर्जिता ॥ २५ ॥

तत्त्वेन देहाहंभावतिरस्कारेण चिदात्मप्रतिष्ठया यो वेत्ति संवेदयते । दीक्षेति—

'ददाति ज्ञानसद्भावं क्षपयत्यखिलं मलम् ।

बोधानुवेधाद् दीक्षोक्ता दानक्षपणधर्मिणी ॥'

इत्यादिना लक्षिता मोक्षावहा, तिलाज्या[1] इति बाह्योपक-रणमनपेक्षमाणा, नात्र संशयः ॥ २५ ॥

एवमान्तरीं सूक्ष्मां पूजामभिधाय बाह्यपूजोपलक्षणमा-त्रमप्याह—

मूर्ध्नि वक्त्रे च हृदये गुह्ये मूर्तौ तथैव च ।

न्यासं कृत्वा शिखां बद्ध्वा सप्तविंशतिमन्त्रिताम् ॥२६॥

ईशानमूर्ध्ने नमः, तत्पुरुषवक्त्राय नमः, अघोरहृदया-य नमः, वामदेवगुह्याय नमः, सद्योजातमूर्तये नमः, इति मन्त्रेण न्यासं कृत्वा, अघोरमन्त्रेण च सप्तविंशतिवारमष्टो-त्तरशताक्षमालापादेन मन्त्रितां शिखां बद्ध्वा ॥ २६ ॥

एकैकं तु दिशां बन्धं दशानामपि योजयेत् ।

तालत्रयं पुरा दत्त्वा सशब्दं विघ्नशान्तये ॥ २७ ॥

छोटिकाभिर्दशभिः,

'भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपाः ।

---

१ 'बाह्या इति' क. पाठः ।

अपसर्पन्तु ते सर्वे दिव्या अस्त्रेण ताडिताः ॥'

इति मन्त्रेण दिग्बन्धं प्रयोजयेत्,

'अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥'

इति मन्त्रेण पूर्वं पार्ष्ण्याघातत्रयं कृत्वा,

'पाषाण्डकारिणो भूता भूता भूम्यन्तरिक्षगाः ।
दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ॥'

इति । सशब्दं तालत्रयं दत्त्वा प्रत्यूहोपशमनाय ॥ २७ ॥

**शिखासंख्याभिजप्तेन तोयेनाभ्युक्षयेत्ततः ।**
**पुष्पादिकं क्रमात् सर्वं लिङ्गे वा स्थण्डिलेऽथवा ॥२८॥**
**चतुर्दशाभिजप्तेन पुष्पेणासनकल्पना ।**

नैर्ऋतेऽस्त्रार्घपात्रे सप्तविंशतिवारमघोरमन्त्रेण मन्त्रितं तोयं विधाय ज्ञानखड्गेन पुष्पगन्धाक्षतादिकं पूजोपकरणमभ्युक्षयेत् शोधनार्थं सिञ्चेत् । ततो मृन्मयादिलिङ्गे स्थण्डिले वा यागभूमौ विहिताष्टदलकमलादिके वा दर्पणप्रतिबिम्बिते चतुर्दशवारमघोराभिजप्तेन पुष्पेण इति पुष्पासनादिकां पूजां कुर्यात् ॥ २८ ॥

**ततः सृष्टिं यजेद्वीरः पुनरेवासनं ततः ॥ २९ ॥**
**सृष्टिं तु संपुटीकृत्य पुनर्यजनमारभेत् ।**

ततो बाह्यपूजानन्तरमकारादिहकारान्तां वर्णसृष्टिं यजेत् लिङ्गादौ च पूजयेत् 'अं नमः' इत्येवम्, पुनरेवं वीरो योगीन्द्रो ध्यानयोगासनं विधाय अकारादिहकारान्तां सृष्टिं संपुटीकृत्य प्रत्याहृत्य अहमिति चित्तत्त्वे प्रतिष्ठितो भूत्वा पुनर्यजनमान्तरीं पूजामारभेत् । आत्मामर्शनमेवाभ्यन्तरी पूजा ॥ २९ ॥

ततो भावनया पूजा—

सर्वतत्त्वसुसंपूर्णां सर्वाभरणभूषिताम् ॥ ३० ॥

यजेद्देवीं महेशानीं सप्तविंशतिमन्त्रिताम् ।

ततः सुगन्धिपुष्पैस्तु यथाशक्त्या समर्चयेत् ॥ ३१ ॥

पूजयेत् परया भक्त्या आत्मानं च निवेदयेत् ।

सर्वतत्त्वैः षट्त्रिंशत् तत्त्वैः सुसंपूर्णां निर्भरां सर्वाभरणभूषितां महेश्वरीं परां देवीमघोरमन्त्रेण परया भक्त्या अत्यादरेण पूजयेत् गन्धपुष्पादिभिरात्मानं च निवेदयेत् समर्पयेत् ॥ ३१ ॥

एवं यजनमाख्यातमग्निकार्येऽप्ययं विधिः ॥ ३२ ॥

कृतपूजाविधिः सम्यक् स्मरन् बीजं प्रसिध्यति ।

एवं द्विप्रकारं यजनं पूजनमुक्तं अग्निकार्ये होमादावपि अयं विधिः, एष एव प्रकारो द्विविधः एवमुक्तविधया कृतपूजाविधिर्योगी सम्यग् देहाहन्तां विस्मार्य जगतो वर्णानां च बीजं मूलकारणं चित्तत्त्वं नित्यमनवरतं व्युत्थानेऽपि स्मरन् प्रत्यवमृशन् प्रसिध्यति अनुत्तरां ज्ञानधारामधिरोहति ॥ ३२ ॥

अथ ध्यानयोगनिष्ठस्य योगिनः सप्रकारं स्मरणे रहस्योपदेशमाह—

आद्यन्तरहितं बीजं विकसत्तिथिमध्यगम् ॥ ३३ ॥

हृत्पद्मान्तर्गतं ध्यायेत् सोमांशं नित्यमभ्यसेत् ।

जगतो वर्णानां 'वा[1] बीजं परारूपं चिदात्मकं तत्त्वं, 'बीजं मां सर्वभूतानां........................ ।'

---

१ 'च' क. पाठः ।

इति गीतासूक्तम् । विकसदिति विकसन्तो अकारादिहकारान्तं प्रसरन्तो

'अमूला तत् क्रमात् ज्ञेया ………. ।' (८ श्लो०)

इत्यत्र ज्ञातमात्रेण[1] व्यञ्जनरूपेण परिणमन्तो वैखर्यां वाचि स्पष्टतां गच्छतश्च ते तिथयः पञ्चदश स्वरास्तेषां मध्यगं तदन्तर्वर्ति अहमित्येवं स्वाभेदेन नतु ध्येयत्वेन हृत्पद्मान्तर्गतं ध्यायेत् राजयोगवित् गुरूपदेशेन अनुशीलयेत्

'गुरुरुपायः ।' (शि० सू० २ । ६)

इत्युक्तम् । तथाच श्रुतिः—

'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥'

इति । कथं ध्यायेदित्याह- आद्यन्तरहितं आदिहान्तवर्णरहितं वर्णानां विकल्परूपत्वात् । स्पन्देऽपि—

'शब्दराशिसमुत्थस्य ………………. ।' (स्प०का०४।१५)

इत्युक्तम् । अविकल्पं यथा स्यात्तथा ध्यायेत् ।

'केवलं बुद्ध्युपादानक्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते ॥'

इत्येवंलक्षणां मध्यमां वाचं प्रतिनिवर्त्य सत्त्वेन विमृशेत् । यदुक्तं श्रीपूर्वे—

'तदेतदहमित्येव विसर्गानुत्तरात्मकम् ।
नाभिकुण्डलहृद्व्योम्नो योगिनोऽहमुपासते ॥'

इति । निर्विकल्पध्यानस्य एतदेव लक्षणम् । ध्यानयोगबलेन षट्चक्रभेदनपूर्वं सुषुम्नायां प्राणापानलयेन पादाग्रादारभ्य करन्ध्रान्तं विद्युद्वत् सहसोत्थिते चिदानन्दपूरे यदेव निमज्जनं तदेव ध्यानं अन्यथा दम्भचर्येति । अत्र व्युत्थाने

---

१ 'व्याख्यातमात्रेण' क. पाठः ।

स्मरणोपयोगिनीं युक्तिमाह— सोमांशमिति, सोमांशं प्राण- स्य अवसाने अपानस्य प्रविविक्तायां नित्यं अनवरतं अभ्य- स्येत् चित्तत्त्वं विमृशेत् ।

'न सा जीवकला काचित् सन्तानद्वयवर्तिनी ।
व्यात्री शिवकला यस्यामधिष्ठात्री न विद्यते ॥'

इत्युक्तेः । तदुक्तं वासिष्ठे—

'अस्तङ्गतवति प्राणे त्वपानेऽभ्युदयोन्मुखे ।
बहिः कुम्भकमालंब्य चिरं भूयो न शोच्यते ॥' (वा०६प्र०)

तथा—

'प्राणक्षय[1]पदान्तस्थमपानक्षयकोटिगम् ।
अपानप्राणयोर्मध्यं[2] चिदात्मानमुपास्महे ॥'

इति । तन्त्रालोकेऽपि—

'तपः प्रभृतयो येच नियमस्तत्तदासनम् ।
प्राणायामाश्च तत्सर्वमेतद् बाह्यवि[3]जृम्भितम् ॥
श्रीमद्वीरावलौ प्रोक्तं बोधमात्रे शिवात्मके ।
चित्तप्रलयबन्धेन प्रलीने शशिभास्करे ॥
प्राप्ते च द्वादशे भागे जीवादित्ये सुबोधके ।
मोक्षः स एव कथितः प्राणायामो निरर्थकः ॥
प्राणायामो न कर्तव्यः शरीरं येन पीड्यते ।' (तं० ४ आ०)

इति । प्रभृतिग्रहणेन तपःस्वाध्यायेश्वरप्रणिधानानि क्रिया- योगः । 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमा- धयोऽष्टावङ्गानि योगस्य' इत्यादयो योगशास्त्रोक्ताः इति ॥३३॥

**यान्यान् कामयते कामांस्तांस्तान् शीघ्रमवाप्नुयात् ।३४।**
**अस्मात् प्रत्ययतामेति सर्वज्ञत्वं न संशयः ।**

---

१ 'क्षये पदा' क. । २ 'मध्ये' क. । ३ 'विलम्बि' क. पाठः ।

कामानभिलाषान् ¹अस्मादेव परतत्त्वाभ्यासात् प्रत्यक्षतामेति प्रादुर्भवति ॥ ३४ ॥

एवं मन्त्रफलावाप्तिरित्येतद्रुद्रयामलम् ॥३५॥

एतदभ्यासतः सिद्धिः सर्वज्ञत्वमवाप्यते ।

एवं द्विप्रकारपूजनेन, रुद्रश्च रुद्राणी च रुद्रौ तयोः शिवशक्त्योर्यामलमुभयसंघट्टात्मकं रूपम् । सिद्धिर्बाह्याभ्यन्तरी च । तदुक्तम्—

'धर्माधर्मान्तरे चित्तं रुद्धं येन तदा तु सः ।
यद्वक्ति स भवेन्मन्त्रः किं पुनर्मान्त्रिकोत्थितः ॥'

इति । तथाच श्रुतिः—

'या वागुदिता या चानुदिता शिवा न शन्तमा भव ।
सुमृळीका सरस्वति मा ते व्योम सन्दृशे ॥'

हे सरस्वति परब्रह्मणोऽविनाभाविनि परामर्शात्मिकशक्ते या त्वं वाग्रूपा चित्परामर्शात्मिका उदिता वैखर्यात्मना आविर्भूता. या च त्वमनुदिता मध्यमारूपेण सती परैरसंवेद्या, या च त्वं शिवा चिदात्मपरामर्शपरतया दुःखसंपर्कशून्या पश्यन्ती रूपा, या च त्वं शन्तमा चिदानन्दघनत्वेन परारूपा, सा त्वं नोऽस्माकं सुमृळीका विभावितालौकिकचिदानन्दा भव इत्याशंसा । तथा ते तव स्वरूपस्य व्योम चिदात्मपरामर्शविस्मरणलक्षणं छिद्रं चतुर्ष्वपि वाक्षु मा संदृशे माद्राक्षम् । त्वत्स्वरूपसाक्षात्कारान्नित्यमप्रच्युतो भूयाममित्याशास्महे ॥ ३५ ॥

---

एकं यः स्वमुखं पिधाय जगतां सृष्टिं विधत्ते स्वयं
यश्चाच्छाद्य निजान्चतुर्दशभुजान्रक्षाविधाने पटुः ।

---

१ 'अपरस्मात्' क. पाठः ।

स्वानि द्वादशलोचनानि च तिरोधाय विणोति चणा-
यस्तं कारणकारणं हितरतं स्वच्छन्दनाथं स्तुमः ॥
दृष्ट्वा दुर्घटनां शास्त्रे गुप्तपादैर्विनिर्मिते ।
राजानलसकेनैषा त्रीशिकाविवृतिः कृता ॥
इति शम् ॥



इति श्रीराजानकलक्ष्मीरामकृता परात्रीशिकालघुविवृतिः समाप्ता ॥

पाठकलेखकयोः श्रेयस्करी भूयादिति ॥

